तथेति ह समुपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचꣳ श्रोष्यामीति ॥ २ ॥

स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच ॥ ३ ॥

का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का

---

तथेत्युक्त्वा ते समुपविविशुर्ह्युपविष्टवन्तः किल । तत्र राज्ञः प्रागल्भ्योपपत्तेः स ह प्रवाहणो जैवलिरुवाचेतरौ भगवन्तौ पूजावन्तावग्रे पूर्वं वदताम् । ब्राह्मणयोरिति लिङ्गाद्राजाऽसौ युवयोर्ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामि । अर्थरहितामित्यपरे वाचमिति विशेषणात् ॥ २ ॥

उक्तयोः स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच-हन्त यद्यनुमंस्यसे त्वा त्वां पृच्छानीत्युक्त इतरः पृच्छेति होवाच ॥ ३ ॥

लब्धानुमतिराह-का साम्नः, प्रकृतत्वादुद्गीथस्य । उद्गीथो ह्यत्रोपास्यत्वेन प्रकृतः । "परोवरीयांसमुद्गीथम्" इति च वक्ष्यति । गतिराश्रयः परायणमित्येतत् । एवं पृष्टो दाल्भ्य उवाच-स्वर इति । स्वरात्मकत्वात्साम्नः । यो यदात्मकः स तद्गतिस्तदाश्रयश्च भवतीति युक्तं मृदाश्रय इव घटादिः । स्वरस्य का गतिरिति, प्राण इति होवाच । प्राणनिष्पाद्यो हि

---

कथं यथोक्तं फलं दृष्टमित्याशङ्क्याऽऽह-दृश्यते हीति । शिलकादीनां तद्विद्यसंयोगे विपरीतधीध्वंसादिकं फलमिति शेषः ॥ १ ॥

तत्रेति निर्धारणार्था सप्तमी । राज्ञः प्रागल्भ्योपपत्तेरित्ययुक्तं तस्य राजत्वे हेत्वभावादित्याशङ्क्याऽऽह-ब्राह्मणयोरितीति । पक्षान्तरं विशेषणसामर्थ्यादुत्थाप्याङ्गीकरोति-अर्थेति ॥ २ ॥

राज्ञा यथोक्तेन प्रकारेणोक्तयोर्ब्राह्मणयोर्मध्ये शालावत्यो दाल्भ्यं प्रत्युवाचेति सम्बन्धः ॥ ३ ॥

साम्नो गतिरित्यन्वयः । सामशब्दार्थमाह-प्रकृतत्वादिति । तस्य पूर्वोत्तरग्रन्थयोः प्रकृतत्वं प्रकटयति-उद्गीथो हीति । गतिशब्दस्य क्रियाविषयत्वं व्यावर्तयति-आश्रय इति । औपचारिकमाश्रयं निरस्यति-परायणमित्येतदिति । स्वरो ध्वनिभेदः । स कथमुद्गीथस्य गतिरित्याशङ्क्याऽऽह-स्वरात्मकत्वादिति । तन्निष्पन्नतया तदाश्रयत्वेन तत्तादात्म्याद्भवति स्वरस्तस्य गतिरित्यर्थः । साम्नः स्वरात्मकत्वेऽपि कथं तद्गतित्वमित्याशङ्क्य दृष्टान्तेन परिहरति-यो यदात्मक इति ।

गतिरित्याप इति होवाच ॥ ४ ॥

अपां का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकꣳसामाभिसंस्थापयामः स्वर्गसꣳस्तावꣳ हि सामेति ॥ ५ ॥

तꣳह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै

---

स्वरस्तस्मात्स्वरस्य प्राणो गतिः। प्राणस्य का गतिरित्यन्नमिति होवाच। अन्नावष्टम्भो हि प्राणः। "शुष्यति वै प्राण ऋतेऽन्नात्" इति हि श्रुतेः। "अन्नं दाम" इति च। अन्नस्य का गतिरित्याप इति होवाच। अप्सम्भवत्वादन्नस्य ॥ ४ ॥

अपां का गतिरित्यसौ लोक इति होवाच। अमुष्माल्लोकाद्वृष्टिः सम्भवति। अमुष्य लोकस्य का गतिरिति पृष्टो दाल्भ्य उवाच–स्वर्गममुं लोकमतीत्याश्रयान्तरं साम न नयेत्कश्चिदिति होवाचाऽऽह। अतो वयमपि स्वर्गं लोकं सामाभिसंस्थापयामः। स्वर्गलोकप्रतिष्ठं साम जानीम इत्यर्थः। स्वर्गसंस्तावं स्वर्गत्वेन संस्तवनं संस्तावो यस्य तत्साम स्वर्गसंस्तावम्। हि यस्मात्स्वर्गो वै लोकः साम वेद इति श्रुतिः ॥ ५ ॥

तमितरः शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच–अप्रतिष्ठितमसंस्थितं परोवरीयस्त्वेनासमाप्तगति सामेत्यर्थः। वा इत्यागमं स्मारयति किलेति च। दाल्भ्य ते तव साम। यस्त्वसहिष्णुः सामविदेतस्मिन्का

---

प्राणस्यान्नावष्टम्भत्वे वाजसनेयश्रुतिं प्रमाणयति–शुष्यतीति। वत्सस्थानीयस्य प्राणस्यान्नं दाम बन्धनमिति च श्रुतिरित्यर्थः। ता अन्नमसृजन्तेति श्रुतेरन्नस्याप्सम्भवत्वं द्रष्टव्यम् ॥ ४ ॥

कथमपामसौ लोको गतिस्तत्राऽऽह–अमुष्मादिति। इति पृष्टो दाल्भ्य उवाच हेति सम्बन्धः। तत्र च्छन्दसि कालनियमाभावमभिप्रेत्य क्रियापदं व्याकरोति–आहेति। यद्यपि परो नास्याऽऽश्रयान्तरं प्रतिपद्यते तथाऽपि त्वया तद्वाच्यमेवेत्याशङ्क्याऽऽह–अत इति। अतः शब्दार्थमेव स्फोरयति–स्वर्गेति। तस्मात्स्वर्गलोकप्रतिष्ठं सामेति पूर्वेण सम्बन्धः। स्वर्गसंस्तावं सामेत्यत्र प्रमाणमाह–स्वर्ग इति ॥ ५ ॥

उपदेशपारम्पर्यमागमः। यत्कृतकं तदनित्यमिति स्वर्गस्यान्तवत्त्वान्न परायणत्वं सम्भवतीत्याशयेनाऽऽह–किलेति चेति। यथोक्तं न्यायं सूचयतीति शेषः। न्यायागमाभ्यामप्रतिष्ठितं ते सामेत्युपसंहरति–दाल्भ्येति। स्वर्गप्रतिष्ठितं सामेति ज्ञाने दोषं दर्शयति–यस्त्विति। असहिष्णुर्मिथ्यावचनमसहमानः सन्निति यावत्।

किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ६ ॥

हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाचामुष्यलोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न

---

ले ब्रूयात्कश्चिद्विपरीतविज्ञानमप्रतिष्ठितं साम प्रतिष्ठितमित्येवंवादापराधिनं मूर्धा शिरस्ते विपतिष्यति विस्पष्टं पतिष्यतीति । एवमुक्तस्यापराधिनस्तथैव तद्विपतेन्न संशयो न त्वहं ब्रवीमीत्यभिप्रायः ।

ननु मूर्धपातार्हं चेदपराधं कृतवानतः परेणानुक्तस्यापि पतेन्मूर्धा न चेदपराध्युक्तस्यापि नैव पतति । अन्यथाऽकृताभ्यागमः कृतनाशश्च स्याताम् । नैष दोषः । कृतस्य कर्मणः शुभाशुभस्य फलप्राप्तेर्देशकालनिमित्तापेक्षत्वात् । तत्रैवं सति मूर्धपातनिमित्तस्याप्यज्ञानस्य पराभिव्याहारनिमित्तापेक्षत्वमिति ॥ ६ ॥

एवमुक्तो दाल्भ्य आह—हन्ताहमेतद्भगवतो वेदानि यत्प्रतिष्ठं सामेत्युक्तः प्रत्युवाच शालावत्यो विद्धीति होवाच । अमुष्य लोकस्य का

---

एतस्मिन्काले मिथ्यावचनावस्थायामित्यर्थः । विपरीतं विज्ञानं यस्य स तथोक्तस्तं प्रतीति विग्रहः । तदेव विपरीतज्ञानमभिनयति—अप्रतिष्ठितमिति । सामाप्रतिष्ठितं प्रतिष्ठितमिति विपरीतज्ञानं प्रति कश्चिद्ब्रूयादिति सम्बन्धः । तदीयवचनमेव दर्शयति—एवमिति । स तथा कथयतु मम तु किं स्यादित्याशङ्क्याऽऽह—एवमुक्तस्येति । तथैव विदुषः शापवाक्यानुसारेणेति यावत् । तदिति शिरोनिरुक्तिः । शापदानाय प्रवृत्तस्त्वयमिति शङ्कां वारयति—नत्विति । मूर्धपातोन्यासानर्थक्यमाशङ्कते—नन्विति । अपराधाभावेऽपि परोक्तिवशान्मूर्धपाते दोषमाह—अन्यथेति । सति चापराधे परोक्तिवैधुर्यान्मूर्धपाताभावे दोषं कथयति—कृतेति । अपराधस्य मूर्धपातहेतोरपि सहकार्यपेक्षत्वादभिव्याहरणं नानर्थकमित्युत्तरमाह—नैष दोष इति । कर्मणः शुभादेराचरितस्य निमित्तापेक्षया फलहेतुत्वेऽपि प्रकृतेऽपराधिनि कुतो व्याहरणापेक्षेत्याशङ्क्याऽऽह—तत्रेति । तत्र शुभादौ कर्मण्येव निमित्तापेक्षया फलप्रदे सतीत्यर्थः । इति पराभिव्याहरणार्थवदिति शेषः ॥ ६ ॥

हन्तेत्यादि व्याकरोति—एवमिति । कथममुष्य लोकस्यैतल्लोकप्रतिष्ठत्वं तदाहायं लोक इति । आदिशब्दः श्राद्धादिसङ्ग्रहार्थः । तत्रैव श्रुतिं प्रमाणयति—तीति । अस्माल्लोकात्प्रतीयमानं चरुपुरोडाशाद्यमिद्धारोपजीवन्ति देवा इति गीती प्रसिद्धिरित्यर्थः । भवतु परं लोकं प्रति प्रतिष्ठात्वमस्य लोकस्य तथाऽपि

प्रतिष्ठां लोकमति नयेदिति होवाच प्रतिष्ठां वयं लोकꣳ सामाभिसꣳस्थापयामः प्रतिष्ठासꣳस्तावꣳ हि सामेति ॥ ७ ॥

तꣳह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाच ॥ ८ ॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

गतिरिरिति पृष्टो दाल्भ्येन शालावत्योऽयं लोक इति होवाच। अयं हि लोको यागदानहोमादिभिरमुं लोकं पुष्यतीति। "अतः प्रदानं देवा उपजीवन्ति" इति हि श्रुतयः। प्रत्यक्षं हि सर्वभूतानां धरणी प्रतिष्ठेति। अतः साम्नोऽप्ययं लोकः प्रतिष्ठैवेति युक्तम्। अस्य लोकस्य का गतिरित्युक्त आह शालावत्यः। न प्रतिष्ठामिमं लोकमतीत्य नयेत्साम कश्चित्। अतो वयं प्रतिष्ठां लोकं सामाभिसंस्थापयामः। यस्मात्प्रतिष्ठासंस्तावं हि प्रतिष्ठात्वेन संस्तुतं सामेत्यर्थः। "इयं वै रथंतरम्" इति च श्रुतिः ॥७॥

तमेवमुक्तवन्तं ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य सामेत्यादि पूर्ववत्। ततः शालावत्य आह–हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाचेतरोऽनुज्ञात आह ॥ ८ ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्ययस्याष्टमः खण्डः ॥ ८ ॥

---

कथमयं लोकः साम्नः प्रतिष्ठेत्याशङ्क्याऽऽह–प्रत्यक्षं हीति। पृथिव्याः सर्वाणि भूतानि प्रति प्रतिष्ठात्वे फलितमाह–अत इति। साम्नोऽपि सर्वान्तर्भावादित्यर्थः। तथाऽपि प्रतिष्ठान्तरं त्वया वाच्यमित्याशङ्क्याऽऽह–अतो वय मिति। यस्मादेतल्लोकप्रतिष्ठात्वेन संस्तुतं साम तस्मादिदं साम प्रत्येतमेव लोकं प्रतिष्ठां जानीम इति योजना। कथं प्रतिष्ठात्वेन सामत्वाविशेषात्पृथिव्या साम संस्तुतमित्याशङ्क्याऽऽह–इयमिति। इयं वै रथन्तरशब्दवाच्यस्य सामविशेषस्य पृथिवीत्वेन स्तुतत्वादुद्गीथस्यापि सामत्वाविशेषात्पृथिव्यात्मत्वं सम्भाव्यत इत्यर्थः ॥ ७ ॥

हन्ताहमेतदित्यत्रानन्तं सामैतदित्युच्यते ॥ ८ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छाङ्करभाष्यटीकायां प्रथमाध्यायस्याष्टमः खण्डः ॥ ८ ॥

## अथ प्रथमाध्यायस्य नवमः खण्डः

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् ॥ १ ॥

स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य

---

अस्य लोकस्य का गतिरिति। आकाश इति होवाच प्रवाहणः। आकाश इति च पर आत्माऽऽकाशो वै नामेति श्रुतेः। तस्य हि कर्म सर्वभूतोत्पादकत्वम्। तस्मिन्नेव हि भूतप्रलयः। तत्तेजोऽसृजत। तेजः परस्यां देवतायामिति हि वक्ष्यति। सर्वाणि ह वा इमानि भूतानि स्थावरजङ्गमान्याकाशादेव समुत्पद्यन्ते तेजोवन्नादिक्रमेण सामर्थ्यात्। आकाशं प्रत्यस्तं यन्ति प्रलयकाले तेनैव विपरीतक्रमेण हि यस्मादाकाश एवैभ्यः सर्वेभ्यो भूतेभ्यो ज्यायान्महत्तरोऽतः स सर्वेषां भूतानां परमयनं परायणं प्रतिष्ठा त्रिष्वपि कालेष्वित्यर्थः ॥ १ ॥

यस्मात्परं परं वरीयो वरीयसोऽप्येष वरः परश्च वरीयांश्च परोवरी-

---

आकाशशब्दस्य भूताकाशविषयत्वं व्यावर्त्य परमात्माविषयत्वं वाक्यशेषवशाद्दर्शयति–आकाश इति चेति। किञ्च परस्याऽऽत्मनः सर्वभूतोत्पादकत्वं कर्मेति वेदान्तमर्यादा तदिहाऽऽकाशे श्रुतम्। तथा च परमात्मैवाऽऽकाशशब्द इत्याह–तस्य हीति। किञ्च परस्मिन्नेव भूतानां प्रलयः स चात्राऽऽकाशे श्रुतस्तस्मात्पर एवाऽऽत्माऽऽकाश इत्याह–तस्मिन्नेवेति। सर्वोत्पादकत्वं परस्य कर्मेत्यत्र मानमाह–तत्तेजोऽसृजतेति। परस्मिन्नेव लयो भूतानामित्यत्रापि मानमाह–तेज इति। भवतु परस्याऽऽत्मनः सर्वोत्पादकत्वं कर्म तथाऽपि किमायातमाकाशस्येति चेत्तत्राऽऽह–सर्वाणीति। कथमयं क्रमो लभ्यते। अविशेषेण हि ततः सर्वोत्पत्तिः श्रुतेत्याशङ्क्याऽऽह–सामर्थ्यादिति। आत्मन आकाशः सम्भूतस्तत्तेजोऽसृजतेत्यादिश्रुतिबलादित्यर्थः। तथाऽपि कथमाकाशे सर्वभूतलयस्तत्राऽऽह–आकाशं प्रतीति। विपर्ययेण तु क्रमोऽत इति न्यायेनाऽऽह–विपरीतेति। आकाशस्य परमात्मत्वे हेत्वन्तरमाह–यस्मादिति। परायणत्वमपि तत्रैव लिङ्गमित्याह–अत इति ॥ १ ॥

आकाशस्तल्लिङ्गादिति न्यायेनाऽऽकाशस्य परमात्मात्वमुक्तमिदानीं तस्योद्गीथे सम्पादितस्य परोवरीयस्त्वं गुणमुपदिशति–यस्मादिति। उत्तरमुत्तरं श्रेष्ठादपि श्रेष्ठोऽयमित्येतत्। साममात्रस्य कथमयं गुणः स्यादित्याशङ्क्याऽऽह–

भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्परोवरीयाꣳस-मुद्गीथमुपास्ते ॥ २ ॥

तꣳ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति ॥ ३ ॥

तथाऽमुष्मिँल्लोके लोक इति स य एतदेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति ॥ ४ ॥

इति च्छान्दोग्योपनिषदि प्रथमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

यानुद्गीथः परमात्मा सम्पन्न इत्यर्थः । अत एव स एषोऽनन्तोऽविद्यमानान्तस्तमेतं परोवरीयांसं परमात्मभूतमनन्तमेवं विद्वान्परोवरीयांसमुद्गीथमुपास्ते । तस्यैतत्फलमाह-परोवरीयः परं परं वरीयो विशिष्टतरं जीवनं हास्य विदुषो भवति दृष्टं फलमदृष्टं च परोवरीयस उत्तरोत्तरविशिष्टतरानेव ब्रह्माकाशान्ताल्लोकाञ्जयति य एतदेवं विद्वानुद्गीथमुपास्ते ॥ २ ॥

किञ्च तमेतमुद्गीथं विद्वानतिधन्वा नामतः शुनकस्यापत्यं शौनक उदरशाण्डिल्याय शिष्यायैतमुद्गीथदर्शनमुक्त्वोवाच । यावत्ते तव प्रजायां प्रजासन्ततावित्यर्थः । एनमुद्गीथं त्वत्सन्ततिजा वेदिष्यन्ते ज्ञास्यन्ति तावन्तं कालं परोवरीयो हैभ्यः प्रसिद्धेभ्यो लौकिकजीवनेभ्य उत्तरोत्तरविशिष्टतरं जीवनं तेभ्यो भविष्यति ॥ ३ ॥

तथाऽदृष्टेऽपि परलोकेऽमुष्मिन्परोवरीयाँल्लोको भविष्यतीत्युक्त्वा-

---

परमात्मेति । आकाशस्य परमात्मत्वे लिङ्गान्तरमाह-अत एवेति । परमात्मसम्पन्नत्वादिति यावत् । आकाशो हि प्रकृतोद्गीथे सम्पादितोऽनन्तः श्रुतः । न चाऽऽनन्त्यं ब्रह्मणोऽन्यत्र युक्तम् । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः । तस्मादाकाशो ब्रह्मेत्यर्थः । सम्प्रत्याकाशशब्दितस्य परस्योद्गीथे सम्पादितस्य परोवरीयस्त्वगुणविशिष्टस्योपास्तिं विदधाति-तमेतमिति । परं परमुपर्युपरीति यावत् । तस्मादेवमुपासीतेति भावः ॥ २ ॥

विधिशेषमर्थवादं दर्शयति-किञ्चेति । इतश्चात्र विधिरस्तीत्येतत्तेभ्यस्तत्सन्ततिजा ये यथोक्तोद्गीथे वेदितारस्तदर्थमित्यर्थः ॥ ३ ॥

तथा दृष्टविशिष्टतरजीवनवदित्यर्थः । अदृष्टेऽपीति च्छेदः । स य एतमि-

## अथ प्रथमाध्यायस्य दशमः खण्डः

मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥ १ ॥

---

शाण्डिल्यायातिधन्वा शौनकः। स्यादेतत्फलं पूर्वेषां महाभाग्यानां नैदंयुगीनानामित्याशङ्कानिवृत्तय आह–स यः कश्चिदेतदेवं विद्वानुद्गीथमेतदुपास्ते तस्याप्येवमेव परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

उद्गीथोपासनप्रसङ्गेन प्रस्तावप्रतिहारविषयमप्युपासनं कर्त(वक्त)व्यमितीदमारभ्यते। आख्यायिका तु सुखावबोधार्था। मटचीहतेषु मटच्योऽशनयस्ताभिर्हतेषु नाशितेषु कुरुषु। कुरुसस्येष्वित्यर्थः। ततो दुर्भिक्षे जात आटिक्याऽनुपजातपयोधरादिस्त्रीव्यञ्जनया सह जाययोषस्तिर्ह नामतश्चक्रस्यापत्यं चाक्रायणः। इभो हस्ती तमर्हतीतीभ्य ईश्वरो हस्त्यारोहो वा तस्य ग्राम इभ्यग्रामस्तस्मिन्प्रद्राणकोऽन्नालाभात्। द्रा कुत्सायां गतौ। कुत्सितां गतिं गतोऽन्त्यावस्थां प्राप्त इत्यर्थः। उवासोषितवान्कस्यचिद्गृहमाश्रित्य ॥ १ ॥

---

स्याद्युत्तरं वाक्यं शङ्कोत्तरत्वेनोत्थाप्य व्याचष्टे–स्यादित्यादिना। अस्मिन्युगे भवन्तीत्यैदंयुगीनास्तेषामैदंयुगीनानां लोकः परोवरीयानिति शेषः। पुनरुक्तिरुद्गीथोपास्तिसमाप्त्यर्था ॥ ४ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छाङ्करभाष्यटीकायां प्रथमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

अथोद्गीथाक्षरोपासनस्यानेकधोक्तत्वाद्वक्तव्यानवशेषात्प्रपाठकपरिसमाप्तेरेव युक्तेत्याशङ्क्याऽऽह–उद्गीथेति। इदमा खण्डान्तरं परामृश्यते। प्रस्तावाद्युपासनं विवक्षितं चेत्तदेवोच्यतां किमनया कथयेत्याशङ्क्याऽऽह–आख्यायिका त्विति। मटच्यो मर्दनहेतवोऽशनयः पाषाणवृष्ट्यो वा। ततः सस्यनाशादित्येतत्। सर्वतः स्वैरसञ्चारेऽपि न व्यभिचारशङ्केति दर्शयितुमाटिक्येति विशेषणम्। प्रद्राणकपदस्य क्रियापदेन सम्बन्धः। कुत्सितगतिप्राप्तौ हेतुरन्नालाभादिति। प्रद्राणकशब्दार्थं धातूपन्यासद्वारा कथयति–द्रा कुत्सायामिति ॥ १ ॥

स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे तꣳ होवाच । नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इति ॥ २ ॥

एतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳ स्यादिति होवाच ॥ ३ ॥

न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति

---

सोऽन्नार्थमटन्निभ्यं कुल्माषान्कुत्सितान्माषान्खादन्तं भक्षयन्तं यदृच्छयोपलभ्य बिभिक्षे याचितवान् । तमुषस्तिं होवाचेभ्यः । नेतोऽस्मान्मया भक्ष्यमाणादुच्छिष्टराशेः कुल्माषा अन्ये न विद्यन्ते । यच्च ये राशौ मे ममोपनिहिताः प्रक्षिप्ता इमे भाजने किं करोमीत्युक्तः प्रत्युवाचोषस्तिः ॥२॥

एतेषामेतानित्यर्थः । मे मह्यं देहीति होवाच । तान्स इभ्योऽस्मा उषस्तये प्रददौ प्रदत्तवान् । अनुपानीयं समीपस्थमुदकं हन्त गृहाणानुपानमित्युक्तः प्रत्युवाच । उच्छिष्टं वै मे ममेदमुदकं पीतं स्याद्यदि पास्यामीत्युक्तवन्तं प्रत्युवाचेतरः ॥ ३ ॥

किं न स्विदेते कुल्माषा अप्युच्छिष्टा इत्युक्त आहोषस्तिर्न वा अजीविष्यं न जीविष्यामीमान्कुल्माषानखादन्नभक्षयन्निति होवाच । काम इच्छातो मे ममोदकपानं लभ्यत इत्यर्थः । अतश्चैतामवस्थां प्राप्तस्य विद्याधर्मयशोवतः स्वात्मपरोपकारसमर्थस्यैतदपि कर्म कुर्वतो नाऽऽपःस्पर्श इत्यभिप्रायः । तस्यापि जीवितं प्रत्युपायान्तरेऽजुगुप्सिते सति

---

यदृच्छया सहसेत्यर्थः । नेत इति वाक्योपादानं तद्व्याकरोति–अस्मादिति । यदित्यव्ययं बहुवचनान्तम् । उपनिहिताः कुल्माषा इति शेषः । तेषां खल्विमे भाजने प्रक्षिप्ता इति योजना ॥ २ ॥

हन्त कुल्माषा भक्षिताश्चेदित्यर्थः ॥ ३ ॥

किं प्रत्युवाचेत्याकाङ्क्षापूर्वकमाह–किमित्यादिना । अनुपानाभावेऽपि तुल्यं जीवनराहित्यमित्याशङ्क्याऽऽह–काम इति । अन्योच्छिष्टकुल्माषभक्षणमृषेर्वदन्त्याः श्रुतेस्तात्पर्यमाह–अतश्चेति । चाक्रायणस्य विदुषोऽभक्ष्यभक्षणदर्शनादिति यावत् । एतामवस्थां प्राप्तस्य जीवितसन्देहमापन्नस्येत्यर्थः । विद्याधर्मयशोवतो ज्ञानादिप्रयुक्तस्यार्तिं प्रपन्नस्येत्येतत् । स्वात्मोपकारे परोपकारे च सामर्थ्यं निग्रहानुग्रहशक्तिमत्त्वम् । एतत्कर्म जीवनमात्रकारणं कुत्सितं चेष्टितमित्यर्थः । उच्छिष्टोदकपानप्रतिषेधश्रुतेरभिप्रायमाह–तस्यापीति । एतत्कर्मेत्यभक्ष्यभक्षणोक्तिः । ननु ज्ञानिनो यथेष्टचेष्टाऽत्रानुज्ञायते । नैवम् । सर्वात्रानुमतिश्चे-

ोवाच कामो म उदकपानमिति ॥ ४ ॥

स ह खादित्वाऽतिशेषाञ्जायाया आजहार साऽग्र एव सुभिक्षा भूव तान्प्रतिगृह्य निदधौ ॥ ५ ॥

स ह प्रातः सञ्जिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि नमात्राꣳ राजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ६ ॥

तं जायोवाच हन्त पत इम एव कुल्माषा इति तान्खादित्वाऽमुं यज्ञं विततमेयाय ॥ ७ ॥

---

ुगुप्सितमेतत्कर्म दोषाय । ज्ञानावलेपेन कुर्वतो नरकपातः स्यादेवेत्यनप्रायः । प्रद्राणकशब्दश्रवणात् ॥ ४ ॥

तांश्च स खादित्वाऽतिशेषानतिशिष्टाञ्जायायै कारुण्यादाजहार । ाऽऽटिक्यग्र एव कुल्माषप्राप्तेः सुभिक्षा शोभनभिक्षा लब्धान्नेत्येतद्बभूव ंवृत्ता । तथाऽपि स्त्रीस्वाभाव्यादनवज्ञाय तान्कुलमाषान्पत्युर्हस्तात्प्रतिृह्य निदधौ निक्षिप्तवती ॥ ५ ॥

स तस्याः कर्म जानन्प्रातरुषःकाले सञ्जिहानः शयनं निद्रां वा परिजन्नुवाच पत्न्याः शृण्वत्या यद्यदि बतेति खिद्यमानोऽन्नस्य स्तोकं भेमहि तद्भुक्त्वाऽन्नं समर्थो गत्वा लभेमहि धनमात्रां धनस्याल्पम् । तोऽस्माकं जीवनं भविष्यतीति । धनलाभे च कारणमाह—राजाऽसौ ातिदूरे स्थाने यक्ष्यते । यजमानत्वात्तस्याऽऽत्मनेपदम् । स च राजा ा मां पात्रमुपलभ्य सर्वैरार्त्विज्यैर्ऋत्विक्कर्मभिर्ऋत्विक्कर्मप्रयोजनायेत्यर्थो णीतेति ॥ ६ ॥ ॥

एवमुक्तवन्तं जायोवाच—हन्त गृहाण हे पत इम एव ये मद्धस्ते विनि-

---

ादिन्यायविरोधादित्याह—ज्ञानेति । तस्मिन्नभिप्राये लिङ्गं दर्शयति—प्रद्राणकेति । ाक्रायणे प्रद्राणकशब्दप्रयोगात्परमापदमापन्नः सन्कुलमाषानुच्छिष्टान्भक्षिवानिति प्रतिभाति । तथा च ज्ञानिनो यथेष्टाचारे प्रमाणाभावादनेकप्रमाविरोधाच्च नासावत्र विवक्षित इत्यर्थः ॥ ४ ॥

स्त्रीस्वाभाव्यं पत्युराज्ञाकरणम् ॥ ५ ॥

तस्याः कर्म कुल्माषाणां परिरक्षणम् । यक्ष्यतीति कस्मान्नोक्तं तत्राऽऽह—जमानत्वादिति । राज्ञो यजमानत्वाद्यागफलस्याऽऽत्मगामित्वाद्यक्ष्यत इत्यात्मपदं प्रयुक्तमित्यर्थः । अन्येषामुपद्रष्टृत्वसम्भवे कुतस्त्वामेव राजा मानयिष्यतीत्याशङ्क्याऽऽह—स चेति ॥ ६

तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश स ह प्रस्तोतारमुवाच ॥८॥

प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति ॥ ९ ॥

---

क्षिप्तास्त्वया कुल्माषा इति। तान्खादित्वाऽमुं यज्ञं राज्ञो विततं विस्तारितमृत्विग्भिरेयाय ॥ ७ ॥

तत्र च गत्वोद्गातॄनुद्गातृपुरुषानागत्य स्तुवन्त्यस्मिन्नित्यास्तावस्तस्मिन्नास्तावे स्तोष्यमाणानुपोपविवेश समीप उपविष्टस्तेषामित्यर्थः। उपविश्य स ह प्रस्तोतारमुवाच ॥ ८ ॥

हे प्रस्तोतरित्यामन्त्र्याभिमुखीकरणाय। या देवता प्रस्तावं प्रस्तावभक्तिमनुगताऽन्वायत्तां तां चेद्देवतां प्रस्तावभक्तेरविद्वान्सन्प्रस्तोष्यसि विदुषो मम समीपे। तत्परोक्षेऽपि चेद्विपतेत्तस्य मूर्धा कर्ममात्रविदामनधिकार एव कर्मणि स्यात्। तच्चानिष्टमविदुषामपि कर्मदर्शनात्। दीक्षणमार्गश्रुतेश्च। अनधिकारे चाविदुषामुत्तर एवैको मार्गः श्रूयेत। न च स्मार्तकर्मनिमित्त एव दक्षिणः पन्थाः। यज्ञेन दानेनेत्यादिश्रुतेः। तथोक्तस्य मयेति च विशेषणाद्विद्वत्समक्षमेव कर्मण्यनधिकारो न सर्वत्राग्नि-

---

हन्तेत्यन्नलेशलाभश्चेदेवं धनलब्धिद्वारा जीवनहेतुरित्यर्थः ॥ ७ ॥

राज्ञो यज्ञस्तत्रेत्युच्यते। उद्गातुरेकत्वे कुतो बहूक्तिरित्याशङ्क्याऽऽह-उद्गातृपुरुषानिति। स्तुवन्त्यस्मिन्निति सप्तम्या संवाददेशो वा निर्दिश्यते ॥ ८ ॥

किमर्थमामन्त्रणं तदाह-अभिमुखीकरणायेति। विदुषः समीपे देवतामविद्वान्प्रस्तोष्यसि चेन्मूर्धा ते विपतिष्यतीत्यग्रे सम्बन्धः। नन्वविद्वन्निन्दाया विवक्षितत्वाद्विद्वत्समीपवचनमकिञ्चित्करमिति चेन्नेत्याह-तत्परोक्षेऽपीति। तस्येत्यविद्वान्प्रस्तोतोच्यते। मा भूत्कर्ममात्रविदां कर्मण्यधिकार इति चेन्नेत्याह-तच्चेति। ते नोभौ कुरुत इत्यादिश्रुताविति शेषः। अविदुषामपि कर्माधिकारे हेत्वन्तरमाह-दक्षिणेति। तदेव व्यतिरेकद्वारा स्फोरयति-अनधिकारे चेति। तस्यैव समुच्चयफलत्वादित्यर्थः। ननु दक्षिणमार्गस्य वापीकूपतटाकादिस्मार्तकर्मप्रयुक्तत्वाद्वैदिके कर्मणि विद्वानेवाधिक्रियते नेत्याह-न चेति। यज्ञेन दानेन लोकाञ्जयन्तीति वैदिककर्मनिष्ठानामज्ञानामेव दक्षिणमार्गश्रवणादिति हेतुमाह-यज्ञेनेति। इतश्चाविदुषां विद्वत्समीपे कर्माधिकारो नास्तीत्याह-तथोक्तस्येति। देवताविज्ञानशून्यस्य ते मूर्धा विपतिष्यतीत्यनेन प्रकारेण मयोक्तस्य मूर्धा व्यपतिष्यदिति विशेषश्रवणाद्विद्वत्समीपे तदनुज्ञामन्तरेण कर्म कुर्वतोऽपराधित्वात्तस्य कर्मण्यनधिकार एवेत्यर्थः। विद्वदसमीपे

एवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदवि-
ानुद्गास्यसि मूर्धा ते विपतिष्यतीति ॥ १० ॥

एवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता
ां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारता-
तूष्णीमासाञ्चक्रिरे ॥ ११ ॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्य दशमः खण्डः ॥ १० ॥

---

ात्रस्मार्तकर्माध्ययनादिषु च । अनुज्ञायास्तत्र तत्र दर्शनात् । कर्ममात्र-
ादामप्यधिकारः सिद्धः कर्मणीति मूर्धा ते विपतिष्यतीति ॥ ९ ॥

एवमेवोद्गातारं प्रतिहर्तारमुवाचेत्यादि समानमन्यत् । ते प्रस्तोत्रादयः
मंभ्यः समारता उपरताः सन्तो मूर्धपातभयात्तूष्णीमासाञ्चक्रिरेऽन्य-
ाकुर्वन्तः । अर्थित्वात् ॥ १० ॥ ११ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य दशमः खण्डः ॥ १० ॥

---

नरविदुषोऽपि कर्मण्यधिकारोऽस्तीत्याह-न सर्वत्रेति । अग्निहोत्रादौ श्रौते
र्मणि स्मार्तेषु च वापीकूपतटाकादिकर्मस्वध्ययनजपादिषु च विद्वत्सन्निधि-
न्तरेणापि सर्वस्मिन्काले कर्ममात्रविदो नाधिकारोऽस्तीत्यशक्यं वक्तुमि-
ार्थः । तत्र हेतुमाह-अनुज्ञेति । भगवन्तं वा अहं विविदिषाणीत्यादिना
ाज्ञा स्वकीयकर्मनिवर्तने प्रार्थनादर्शनादेत एव मया समतिसृष्टाः स्तुवता-
ाति च्चानुज्ञोपलम्भादस्त्येवाविदुषामपि कर्मण्यधिकार इत्यर्थः । उक्तमर्थ-
पसंहरति-कर्ममात्रेति । विद्वत्समीपे तदनुज्ञामलब्ध्वा नास्ति कर्मानुष्ठानमि-
ातन्निगमयितुमितिशब्दः । मूर्धा ते विपतिष्यतीत्येतदन्तं प्रस्तोतृविषयं
ाक्यं व्याख्यातमित्यनुवदति-मूर्धेति ॥ ९ ॥

तूष्णीमित्यस्यार्थमाह—अन्यच्चेति । तत्र हेतुमाह—अर्थित्वादिति । तत्तद्दे-
ताविषयविज्ञानार्थित्वेन कर्मान्तरमकुर्वन्तश्चाक्रायणाभिमुखाः स्थिता
यर्थः ॥१०॥११॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छाङ्कर भाष्यटीकायां
प्रथमाध्यायस्य दशमः खण्डः ॥ १० ॥

## अथ प्रथमाध्यायस्यैकादशः खण्डः

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥

स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं भगवतो वा अहमवित्त्याऽन्यानवृषि ॥ २ ॥

भगवाँस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥ ३ ॥

---

अथानन्तरं हैनमुषस्तिं यजमानो राजोवाच। भगवन्तं वै पूजावन्तमहं विविदिषाणि वेदितुमिच्छामीत्युक्त उषस्तिरस्मि चाक्रायणस्तवापि श्रोत्रपथमागतो यदीति होवाचोक्तवान् ॥ १ ॥

स ह यजमान उवाच सत्यमेवमहं भगवन्तं बहुगुणमश्रौषं सर्वैश्च ऋत्विक्कर्मभिरार्त्विज्यैः पर्यैषिषं पर्येषणं कृतवानस्मि। अन्विष्य भगवतो वा अहमवित्त्याऽलाभेनान्यानिमानवृषि वृतवानस्मि ॥ २ ॥

अद्यापि भगवाँस्त्वेव मे मम सर्वैरार्त्विज्यैर्ऋत्विक्कर्मार्थमस्त्वित्युक्तस्तथेत्याहोषस्तिः। किन्त्वथैवं तर्ह्येत एव त्वया पूर्वं वृता मया समतिसृष्टा मया सम्यक्प्रसन्नेनानुज्ञाताः सन्तः स्तुवताम्। त्वया त्वेतत्कार्यम्। यावत्त्वेभ्यः प्रस्तोत्रादिभ्यः सर्वेभ्यो धनं दद्याः प्रयच्छसि तावन्मम दद्या इत्युक्तस्तथेति ह यजमान उवाच ॥ ३ ॥

---

अथ हैनमित्यादि व्याकरोति-अथेति। प्रस्तोतृप्रभृतीनां तूष्णींभावादिति शेषः ॥ १ ॥

चाक्रायणस्य वचनमङ्गी करोति—सत्यमिति। अङ्गीकारमेव स्फोरयति—एवमिति। आर्त्विज्यैरित्यस्य व्याख्यानमृत्विक्कर्मभिरिति। तदर्थमिति यावत्। यदि मामार्त्विज्यार्थमनुसंहितवानसि किमितीमानन्यान्वृतवानित्याशङ्क्याऽऽह—अन्विष्येति ॥ २ ॥

एवं गते किमधुना कर्तव्यमित्याशङ्क्याऽऽह-अद्यापीति। चाक्रायणानुमतिं श्रुत्वा किमिदमिति व्याकुलितेषु प्रस्तोतृप्रभृतिषु ब्रूते-किन्त्विति। उभयानुमत्यपेक्षयाऽऽनन्तर्यम्। ममालाभेनामीषां वृतत्वस्य निवृत्त्यवस्थायामित्याह—तर्हीति। अनुज्ञाताः सन्तः प्रस्तोत्रादयः स्तुतिं कुर्वतामित्याह—स्तुवतामिति। अस्त्वेवं त्वदर्थं पुनर्मया किं विधेयमित्याशङ्क्याऽऽह—त्वया त्विति ॥ ३ ॥

अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति । मा भगवानवोचत्कतमा सा देवतेति ॥ ४ ॥

प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ५ ॥

अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ६ ॥

---

अथ हैनमौषस्त्यं वचः श्रुत्वा प्रस्तोतोपससादोषस्तिं विनयेनोपजगाम। प्रस्तोतर्या देवतेत्यादि मा मां भगवानवोचत्पूर्वम्। कतमा सा देवता या प्रस्तावभक्तिमन्वायत्तेति ॥ ४ ॥

पृष्टः प्राण इति होवाच। युक्तं प्रस्तावस्य प्राणो देवतेति। कथं, सर्वाणि स्थावरजङ्गमानि भूतानि प्राणमेवाभिसंविशन्ति प्रलयकाले प्राणमभिलक्षयित्वा प्राणात्मनैवोज्जिहते प्राणादेवोद्गच्छन्तीत्यर्थ उत्पत्तिकाले। अतः सैषा देवता प्रस्तावमन्वायत्ता तां चेदवि[द्वां]स्त्वं प्रास्तोष्यः प्रस्तवनं प्रस्तावभक्तिं कृतवानसि यदि मूर्धा शिरस्ते व्यपतिष्यद्विपतितमभविष्यत्तथोक्तस्य मया तत्काले मूर्धा ते विपतिष्यतीति। अतस्त्वया साधु कृतम्। मया निषिद्धः कर्मणो यदुपरममकार्षीरित्यभिप्रायः ॥ ५ ॥

तथोद्गाता पप्रच्छ कतमा सोद्गीथभक्तिमनुगताऽन्वायत्ता देवतेति॥६॥

---

यजमानं प्रत्युषस्तिप्रोक्तं वचः श्रुत्वाऽनन्तरमेनमुषस्तिं प्रस्तोता त्यक्तव्याकुलत्वः शिष्यत्वेनोपसन्नवानित्याह—अथेति । उपगतिप्रकारमभिनयति-प्रस्तोतरिति ॥ ४ ॥

प्रतिवचनमादाय प्रशब्दसामार्थ्यं गृहीत्वा तात्पर्यमाह—पृष्ट इति। कथमेह प्राणशब्दार्थो निश्चीयतामित्याशङ्क्यात एव प्राण इति न्यायेनाऽऽह—कथमिति। प्राणात्मनैव संविशन्तीति पूर्वेण सम्बन्धः। प्राणशब्दार्थस्य परमात्मत्वेन निर्णीतत्वमतः शब्दार्थः। चेच्छब्दार्थो यदीत्युक्तः। मया तथोक्तस्य मूर्धा ते विपतिष्यतीत्येवमुक्तस्य तव तत्काले स्वापराधावस्थायां मूर्धा व्यपतिष्यदेवेति योजना। प्रमादस्य महतस्त्वया परिहृतत्वादित्यतः शब्दार्थः॥५॥६॥

आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ७ ॥

अथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ८ ॥

अन्नमिति होवाच सर्वाणि हैं वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥९॥

इति च्छान्दोग्योपनिषदि प्रथमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

पृष्ट आदित्य इति होवाच । सर्वाणि ह वा इमानि भूतान्यादित्यामुच्चैरूर्ध्वं सन्तं गायन्ति शब्दयन्ति स्तुवन्तीत्यभिप्रायः । उच्छब्दसामान्यात्प्रशब्दसामान्यादिव प्राणोऽतः सैषा देवतेत्यानि पूर्ववत् ॥ ७ ॥
एवमेवाथ हैनं प्रतिहर्तोपससाद कतमा सा देवता प्रतिहारमन्वायत्तेति॥८॥

पृष्टोऽन्नमिति होवाच। सर्वाणि ह वा इमानि भूतान्यन्नमेवाऽऽत्मानं प्रति सर्वतः प्रतिहरमाणानि जीवन्ति। सैषा देवता प्रतिशब्दसामान्यात्प्रतिहारभक्तिनुगता। समानमन्यत्तथोक्तस्य मयेति । प्रस्तावोद्गीथप्रतिहारभक्तीः प्राणादित्यान्नदृष्ट्योपासीतेति समुदायार्थः। प्राणाद्यापत्तिः कर्मसमृद्धिर्वा फलमिति ॥ ९ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

यथा प्रशब्दसामान्यात्प्राणः प्रस्तावदेवतेत्युक्तं तथाऽऽदित्योद्गीथयोरुच्छब्दसामान्यादुद्गीथदेवताऽऽदित्य इत्याह—उच्छब्देति । उक्तसामान्यपरामर्शार्थोऽतःशब्दः ॥ ७ ॥

एवमेव प्रस्तोतृवदुद्गातृवच्चेत्यर्थः । ऋत्विग्भ्यां प्रस्तावोद्गीथदेवतयोर्विज्ञानानन्तर्यमथशब्दार्थः ॥ ८ ॥

कथमन्नस्य प्रतिहारत्वं तदाह—सर्वाणीति । तां चेदविद्वानित्याद्यन्यदित्युच्यते । यथोक्तस्य मयेत्येतदन्तमिति शेषः । कीदृगुपासनमस्मिन्प्रकरणे विव-

# अथ प्रथमाध्यायस्य द्वादशः खण्डः

अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः
वाध्यायमुद्वव्राज ॥ १ ॥

---

अतीते खण्डेऽन्नाप्राप्तिनिमित्ता कष्टावस्थोक्तोच्छिष्टपर्युषितभक्षणलक्ष-
ा सा मा भूदित्यन्नलाभायाथानन्तरं शौवः श्वभिर्दृष्ट उद्गीथ उद्गानं
ामातः प्रस्तूयते। तत्तत्र ह किल बको नामतो दल्भस्यापत्यं
ाल्भ्यो ग्लावो वा नामतो मित्रायाश्चापत्यं मैत्रेयः। वाशब्दश्चार्थे। द्व्या-
ष्यायणो ह्यसौ। वस्तुविषये क्रियास्विव विकल्पानुपपत्तेः। द्विनामा
्गोत्र इत्यादि हि स्मृतिः। दृश्यते चोभयतः पिण्डभाक्त्वम्। उद्गीथे

---

ृतमित्याशङ्क्याऽऽह—प्रस्तावेति। उपास्तित्रयस्य फलं दर्शयति—प्राणादीति॥९॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छाङ्करभाष्यटीकायां
प्रथमाध्यायस्यैकादशः खण्डः॥ ११ ॥

---

पूर्वोत्तरखण्डयोः सङ्गतिं दर्शयन्नुपासनान्तरं प्रस्तौति—अतीत इति। अन्न-
ाभस्यापेक्षितत्वमतःशब्दार्थः। प्रकारान्तरेणोद्गीथोपासनमन्नकामस्य प्रस्तुत्य
तिपत्तिसौकर्यार्थमाख्यायिकामादत्ते—तत्तत्रेति। न केवलं दल्भस्यापत्यं
न्तु मित्रायाश्चेति चार्थः। न च सा दल्भस्य पत्नीति युक्तम्। तथा सति
त्रेयपदस्य वैयर्थ्यात्। पत्न्यन्तरापत्यत्वव्यावृत्त्यर्थमिति चेन्न। प्रयोजनाभा-
ात्। नन्वत्र वाशब्दाद्द्व्यावृषी विवक्षिताविति चेन्नेत्याह—वाशब्द इति। कथं
तर्दल्भस्यापत्यं बकस्तद्भार्याया मित्रायाश्चापत्यं भवितुमुत्सहते तत्राऽऽह—
ामुष्यायणो हीति। चैकितायनो दाल्भ्य इत्यत्रोक्तमेतदिति सूचयितुं हिशब्दः।
देतानुदितहोमवत्केषांचिद्दृष्ट्या बकोऽसावन्येषां ग्लाव इत्येकस्मिन्नपि विक-
ो भविष्यति नेत्याह—वस्तुविषय इति। कथं पुनर्विना मानमेकस्यैव द्विनाम-
ाग्यङ्गी क्रियते तत्राऽऽह—द्विनामेति। इत्यादिवाक्यं स्मृतिरूपं धर्मशास्त्रे प्रसि-
मित्यर्थः। द्विगोत्रत्वमेकस्य लोकेऽपि प्रसिद्धमित्याह—दृश्यते चेति। यतः सुतो
ायते येन चायं धर्मतो गृह्यते तयोरुभयोरित्यात्याह—उभयत इति। 'उभयो-
यसावृक्थी पिण्डदाता च धर्मतः' इति स्मरन्तीत्यर्थः। दाल्भ्यादन्यो मैत्रेय
यङ्गीकृत्याऽऽह—उद्गीथ इति। तदुपास्तौ तात्पर्यमृषावनादरे हेतुः। तस्माद-
त्रयमृषिद्वयंवाविवक्षितमित्यर्थः। पक्षान्तरद्योतनार्थो वाशब्दः। श्रौतो वाश-

तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति ॥ २ ॥

तान्होवाचेहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो

---

बद्धचित्तत्वादृषावनादराद्वावाशब्दः स्वाध्यायार्थः। स्वाध्यायं कर्तुं ग्रामाद्बहिरुद्वव्राजोद्गतवान्विविक्तदेशस्थोदकाभ्याशम्। उद्वव्राज प्रतिपालयाञ्चकारेति चैकवचनाल्लिङ्गादेकोऽसावृषिः। श्वोद्गीथकालप्रतिपालनादृषेः स्वाध्यायकरणमन्नकामनयेति लक्ष्यत इत्यभिप्रायतः ॥ १ ॥

स्वाध्यायेन तोषिता देवतर्षिर्वा श्वरूपं गृहीत्वा श्वा श्वेतः संस्तस्मा ऋषये तदनुग्रहार्थं प्रादुर्बभूव प्रादुश्चकार। तमन्ये शुक्लं श्वानं क्षुल्लकाः श्वान उपसमेत्योचुरुक्तवन्तोऽन्नं नोऽस्मभ्यं भगवानागायत्वागानेन निष्पादयत्वित्यर्थः। मुख्यप्राणं वागादयो वा प्राणमन्वन्नभुजः स्वाध्यायपरितोषिताः सन्तोऽनुगृह्णीयुरेनं स्वरूपमादायेति युक्तमेवं प्रतिपत्तुम्। अशनायाम वै बुभुक्षिताः स्मो वा इति ॥ २ ॥

एवमुक्ते श्वा श्वेत उवाच तान्क्षुल्लकाञ्शुन इहैवास्मिन्नेव देशे मा मां प्रातः प्रातःकाल उपसमीयातेति। दैर्घ्यं छान्दसं समीयातेति प्रमादपाठो वा। प्रातःकालकरणं तत्काल एव कर्तव्यार्थम्। अन्नदस्य वा

---

ऽद्दस्तर्हि किमर्थमित्याशङ्क्य पाठादन्यत्र तस्य फलमित्याह—वाशब्द इति। मैत्रेयान्तं वाक्यं व्याख्याय स्वाध्यायमित्यादि व्याचष्टे—स्वाध्यायमिति। यदुक्तमृषिरेको बकादिशब्दैरुच्यत इति। तत्र लिङ्गमाह—उद्वव्राजेति। शुनामुद्गीथः श्वोद्गीथस्तत्कालस्य प्रतिपालनं प्रतीक्षणमृषेर्दृश्यते तेषां चोद्गानमन्नार्थं तदृषेरपि स्वाध्यायकरणं तदर्थमित्याह—श्वोद्गीथेति। यथोक्तार्थवाचिशब्दाभावेऽपि सामर्थ्यादयमर्थो भातीत्याह—अभिप्रायत इति ॥ १ ॥

तस्मा इत्यादि व्याचष्टे—स्वाध्यायेनेति। क्षुल्लकाः क्षुद्रकाः शिशव इति यावत्। श्वेतः श्वा कश्चिदृषिर्देवता वा। अन्ये च श्वानो देवता ऋषयो वेत्युक्तम्। सम्प्रति विवक्षितं पक्षमाह—मुख्येति। तमूचुरिति सम्बन्धः। तानेव विशिनष्टि—प्राणमन्विति। मुख्यप्राणसहितवागादिग्रहे हेतुमाह—स्वाध्यायेति। अन्यथा वाक्यनिर्धारितार्थं स्यादिति भावः। किमित्यन्नं भवद्भ्यो मया सम्पाद्यते न हि भवतामभोक्तॄणां तेन कृत्यमस्तीत्याशङ्क्य त्वन्निष्ठचेतनद्वारेणास्माकमपि भोगसिद्धेर्मैवमित्याह—अशनायाम वा इत्यादिना ॥ २ ॥

किमिति प्रातःकालप्रतीक्षणं कृतं तत्राऽऽह—प्रातरिति। उद्गानस्येति शेषः। प्रातःकालप्रतीक्षणकरणे कारणान्तरमाह—अन्नदस्येति। तस्य वृष्टिद्वाराऽन्नदत्वं द्रष्टव्यम्।

ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ॥ ३ ॥

ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः संरब्धाः सर्पन्तीवमाससृपुस्ते ह समुपविश्य हिं चक्रुः ॥ ४ ॥

ओ३मदा३मों पिबा३मों३ देवो वरुणः प्रजापतिः सविता२ऽन्नमिहा२ऽऽहरदन्नपते३ऽन्नमिहा२ऽऽहरा२ऽऽहरो३मिति ॥ ५ ॥

इति च्छान्दोग्योपनिषदि प्रथमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

वेतुरपराह्णेऽनाभिमुख्यात् । तत्रैव ह बको दाल्भ्यो ग्लावो वा मैत्रेय षेः प्रतिपालयाञ्चकार प्रतीक्षणं कृतवानित्यर्थः ॥ ३ ॥

ते श्वानस्तत्रैवाऽऽगम्य ऋषेः समक्षं यथैवेह कर्मणि बहिष्पवमानेन त्रेण स्तोष्यमाणा उद्गातृपुरुषाः संरब्धाः संलग्ना अन्योन्यमेव मुखेनान्यस्य पुच्छं गृहीत्वाऽऽससृपुरासृप्तवन्त; परिभ्रमणं कृतवन्त इत्य। त एवं संसृप्य समुपविश्योपविष्टाः सन्तो हिं चक्रुर्हिङ्कारं कृतवन्तः ॥४॥

ओमदामों पिबामों देवो द्योतनात् । वरुणो वर्षणाज्जगतः । प्रजापतिः ानात्प्रजानाम् । सविता प्रसवितृत्वात्सर्वस्याऽऽदित्य उच्यते । एतैः यैः स एवम्भूत आदित्योऽन्नमस्मभ्यमिहाऽऽहरदाहरत्विति । त एवं कृत्वा पुनरप्यूचुः–स त्वं हेऽन्नपते । स हि सर्वस्यान्नस्य प्रसवितृत्वातः । न हि तत्पाकेन विना प्रभूतमन्नमणुमात्रमपि जायते प्राणिनाम् । ऽन्नपतिः । हेऽन्नपतेऽन्नमस्मभ्यमिहाऽऽहराऽऽहरेति । अभ्यास आद:। ॐमिति ॥ ५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

यादि व्याचष्टे–तत्रेति । ऋषेरन्नकामत्वमितोऽवगतम् ॥ ३ ॥

त्यादि व्याकरोति–ते श्वान इति । समक्षमाससृपुरिति सम्बन्धः । उद्गातृपु इत्यध्वर्युप्रमुखा यजमानपर्यन्ता गृह्यन्ते । अन्योन्यं संलग्नाः सर्पन्ती विशेषः ।४।

हिङ्कारस्वरूपमाह–ओमित्यादिना । त्रिवारमोङ्कारो गानार्थमुच्चरितः । अदानं करवाम । पिबाम पानं करवामेत्येतत् । इति शब्दो हिङ्कारसमाप्त्यर्थः । सवितृत्वमादित्यस्य साधयति–नहीति । इहेति प्रकृतदेशोक्तिः । ॐकारः प्रार्थनामन्त्रसमाप्त्यर्थः । भक्तिविषयोपास्तिसमाप्त्यर्थमितिपदम् ॥ ५ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छाङ्करभाष्यटीकायां प्रथमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

## अथ प्रथमाध्यायस्य त्रयोदशः खण्डः

अयं वाव लोको हाउकारो वायुर्हाइकारश्चन्द्रमा अथकारः । आत्मेहकारोऽग्निरीकारः ॥ १ ॥

भक्तिविषयोपासनं सामावयवसम्बद्धमित्यतः सामावयवान्तरस्तोभाक्षरविषयाण्युपासनान्तराणि संहतान्युपदिश्यन्तेऽनन्तरं सामावयवसम्बद्धत्वाविशेषात्–अयं वावायमेव लोको हाउकारः स्तोभो रथन्तरे साम्नि प्रसिद्धः–इयं वै रथन्तरमिति। अस्मात्सम्बन्धसामान्याद्धाउकारस्तोभोऽयं लोक इत्येवमुपासीत । वायुर्हाइकारः । वामदेव्ये सामनि हाइकारः प्रसिद्धः । वाय्वप्सम्बन्धश्च वामदेवस्य साम्नो योनिरिति । अस्मात्सामान्याद्धाइकारं वायुदृष्ट्योपासीत । चन्द्रमा अथकारः । चन्द्रदृष्ट्याऽथकारमुपासीत । अन्ने हीदं स्थितम् । अनात्मा चन्द्रः । थकाराकारसामान्याच्च । आत्मेहकारः । इहेति स्तोभः प्रत्यक्षो ह्यात्मेति व्यप-

---

ननु भक्तिसम्बन्धानामुपासनानां नीतत्वात्समस्तस्येत्यादिवक्तव्ये किमनन्तरखण्डेनेत्याशङ्कयाऽऽह–भक्तीति। इत्यतोऽस्मात्प्रसङ्गादिति यावत्। ऋगक्षराणि गीयन्ते तद्व्यतिरिक्तानि वाच्यशून्यानि गीतिसिद्ध्यर्थानि स्तोभाक्षराणि परिभाष्यन्ते तानि च कर्मापूर्वनिर्वृत्तिद्वारेण फलवत्त्वादुपास्यानि तदुपास्तिविधिपरमुत्तरं वाक्यमित्यर्थः। वक्ष्यमाणोपासनानां प्रत्येकं स्वातन्त्र्यं नास्तीत्याह–संहतानीति। तेषामनन्तरमुपदेशे हेतुमाह–सामावयवेति। न चैवंविधस्तोभो नास्तीति ग्राह्यमित्याह–रथन्तर इति। तथाऽपि कथं पृथिवीदृष्ट्या यथोक्तस्तोभस्योपास्यत्वं तदाह–इयमिति। इयं वै रथन्तरमित्यत्र पृथिव्या रथन्तरत्वं श्रुतं प्रस्तुतश्च स्तोभो रथन्तरेऽस्तीत्युक्तम्। तथा च यथोक्तात्सम्बन्धरूपात्सादृश्यात्पृथिवीदृष्ट्या हाउकार उपास्य इत्यर्थः। कथं पुनर्वायुदृष्ट्या हाइकारस्योपास्यत्वं तत्राऽऽह–वाय्वप्सम्बन्धश्चेति। हाइकारो वामदेव्ये साम्नि प्रसिद्धः। तस्य च वायोरपां च सम्बन्धो योनिर्मैथुनेच्छावतीनामपां वायुः पृष्ठेऽत्यवर्तत ततो वामदेव्यं सामाभवदिति श्रुतेः। तस्माद्यथोक्ताद्वामदेव्यसामसम्बन्धसामान्याद्वायुदृष्ट्या हाइकारमुपासीतेत्यर्थः। कथमथकारस्य चन्द्रदृष्ट्योपासनं तत्राऽऽह–अन्ने हीति। तथा च थकारसामान्याद्यथोक्तोपास्तिसिद्धिरिति शेषः। थकारवदकारसामान्याच्च चन्द्रदृष्ट्याऽथकारमुपासीतेत्याह–थकारेति। अथकारे तावद्व्यक्तोऽकारोऽनात्मनि चन्द्रमस्यपि सोऽस्तीति तद्युक्तं यथोक्तमुपासनमित्यर्थः। प्रथममप्रत्यक्षः पश्चात्प्रत्यक्षीभवन्निति शेषः। तत्सामान्यमिहेति

आदित्य ऊकारो निहव एकारो विश्वे देवा औहोयिकारः
ापतिर्हिङ्कारः प्राणः स्वरोऽन्नं या वाग्विराट् ॥ २॥
अनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुङ्कारः ॥ ३ ॥

यते । इहेति च स्तोभः । तत्सामान्यात् । अग्निरीकारः ईनिधनानि
ऽऽग्नेयानि सर्वाणि सामानीत्यतस्तत्सामान्यात् ॥ १ ॥
आदित्य ऊकारः । उच्चैरूर्ध्वं सन्तमादित्यं गायन्त्यूकारश्चायं स्तोभः ।
दित्यदैवत्ये साम्नि स्तोभ ऊ इत्यादित्य ऊकारः । निहव इत्याह्वानमे-
एः स्तोभः । एहीति चाऽऽह्वयन्तीति तत्सामान्यात् । विश्वे देवा
होयिकारो वैश्वदेव्ये साम्नि स्तोभस्य दर्शनात् । प्रजापतिर्हिङ्कारः ।
निरुक्त्याद्धिङ्कारस्य चाव्यक्तत्वात् । प्राणः स्वरः । स्वर इति स्तोभः ।
ास्य च स्वरहेतुत्वसामान्यात् । अन्नं या या इति स्तोभोऽन्नम् ।
न हीदं यातीत्यतस्तत्सामान्यात् । वागिति स्तोभो विराडन्नं देव-
वेशेषो वा । वैराजे साम्नि स्तोभदर्शनात् ॥ २ ॥
अनिरुक्तोऽव्यक्तत्वादिदं चेदं चेति निर्वक्तुं न शक्यत इत्यतः सञ्चरो
ल्प्यमानस्वरूप इत्यर्थः । कोऽसावित्याह-त्रयोदशः स्तोभो हुङ्कारः ।

दिश्यमानत्वं तस्मादात्मदृष्टिरिहेति स्तोभे कर्तव्येत्याह-तत्सामान्यादिति ।
दृष्टिरीकाराख्ये स्तोभाक्षरे कर्तव्येत्यत्र हेतुमाह-ईनिधनानीति । ईकारो
ीयते येषु सामसु तान्याग्नेयानि प्रसिद्धानि । तथा च तेष्वग्निरीकार-
भयोर्भावादस्मात्सादृश्यादीकारमग्निदृष्ट्योपासीतेत्यर्थः ॥ १ ॥
ऊकारमादित्यदृष्ट्या कथमुपासीतेत्याशङ्क्याऽऽह-उच्चैरिति । ऊकारादि-
विधान्तरेण सादृश्यमाह-आदित्येति । एकारसामान्यान्निहवदृष्टिरेकारे
ो कार्येत्याह-निहव इत्यादिना । औहोयिकारस्य विश्वे(श्व)देवदृष्ट्योपास्तौ
ाह-वैश्वदेव इति । प्रजापतिदृष्ट्या हिङ्कारोपास्यत्वे हेतुः-आनिरुक्त्यादिति ।
पीतादिरूपेण निरुक्त्यविषयत्वात्प्रजापतेरित्यर्थः । अव्यक्तत्वाद्रूपादिर-
वादित्यर्थः । प्राणस्य चेति चकारात्स्वरस्य चेत्यर्थः । स्वरहेतुत्वं तन्नि-
त्वेन तदात्मकत्वम् । अन्नं या इति वाक्यं व्याचष्टे-या इतीति । अन्नदृष्टिर्या
स्तोभे कर्तव्येत्यत्र हेतुमाह-अन्नेनेति । विरड्दृष्टिर्वागिति स्तोभे कार्येत्यत्र
ाह-वैराज इति ॥ २ ॥
अनिरुक्तः कारणात्मा । तस्यानिरुक्तत्वं साधयति-अव्यक्तत्वादिति । स
कधा कार्यरूपेण सञ्चरतीति सञ्चरः । हुङ्कारोऽपि शाखाभेदेन विक-
ानस्वरूपस्त्रयोदशश्चायं वावेत्यारभ्य गण्यमानस्ततश्च कारणदृष्ट्या हुङ्का

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवᳪ साम्नामुपनिषदं वेदोपनिषदं वेद ॥ ४ ॥

इति च्छान्दोग्योपनिषदि प्रथमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

इति च्छान्दोग्योपनिषद्ब्राह्मणे प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

अव्यक्तो ह्ययमतोऽनिरुक्तविशेष एवोपास्य इत्यभिप्रायः ॥ ३ ॥

स्तोभाक्षरोपासनाफलमाह—दुग्धेऽस्मै वाग्दोहमित्याद्युक्तार्थम् । य एतामेवं यथोक्तलक्षणां साम्नां सामावयवस्तोभाक्षरविषयामुपनिषदं दर्शनं वेद तस्यैतद्यथोक्तं फलमित्यर्थः । द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः । सामावयवविषयोपासनाविशेषपरिसमाप्त्यर्थो वेति ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य त्रयोदशः खण्डः ॥१३॥

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ छान्दोग्योपनिषद्विवरणे प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

रमुपासीतेत्यर्थः । उक्तमेवोपपादयति-अव्यक्तो हीति । तत्र विकल्प्यमानत्वं हेतुः ।३।

नैतानि व्यस्तान्युपासनानि । प्रत्येकं फलाश्रवणात् । समस्तं पुनरेकमिदमुपासनमेकफलत्वादित्यभिप्रेत्याऽऽह-स्तोभाक्षरेति । उपनिषदं वेदोपनिषदं वेदेत्यावृत्तेस्तात्पर्यमाह- द्विरभ्यास इति । प्रथमप्रपाठकव्याख्यानसमाप्ताविति शब्दः ।।४।।

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिच्छाङ्करभाष्यटीकायां प्रथमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

इति श्रीमत्परमहंसपरिव्राजकशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायां प्रथमोऽध्यायः समाप्तः ॥ १ ॥

# अथ द्वितीयाध्यायस्य प्रथमः खण्डः

ॐ । समस्तस्य खलु साम्न उपासनꣳसाधु यत्खलु साधु तत्सा-
याचक्षते यदसाधु तदसामेति ॥ १ ॥

तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुर-

ओमित्येतदक्षरमित्यादिना सामावयवविषयमुपासनमनेकफलमुपदि-
। अनन्तरं च स्तोभाक्षरविषयमुपासनमुक्तम् । सर्वथाऽपि सामैक-
सम्बद्धमेव तदिति । अथेदानीं समस्ते साम्नि समस्तसामविषयाण्यु-
ानानि वक्ष्यामीत्यारभते श्रुतिः । युक्त ह्येकदेशोपासनानन्तरमेकदेशि-
यमुपासनमुच्यत इति ।
समस्तस्य सर्वावयवविशिष्टस्य पाञ्चभक्तिकस्य साप्तभक्तिकस्य
ार्थः । खल्विति वाक्यालङ्कारार्थः । साम्न उपासनं साधु । समस्ते
म्न साधु दृष्टिविधिपरत्वान्न पूर्वोपासननिन्दार्थत्वं साधुशब्दस्य । ननु
ाविद्यमानं साधुत्वं समस्ते साम्न्यभिधीयते । न । साधु सामेत्यु-
त इत्युपसंहारात् । साधुशब्दः शोभनवाची । कथमवगम्यत इत्याह–
ालु लोके साधु शोभनमनवद्यं प्रसिद्धं तत्सामेत्याचक्षते कुशलाः ।
ाधु विपरीतं तदसामेति ॥ १ ॥
तत्तत्रैव साध्वसाधुविवेककरण उताप्याहुः साम्नैनं राजानं सामन्तं
ागादुपगतवान् । कोऽसौ । यतोऽसाधुत्वमाप्त्याशङ्का स इत्यभि-

पूर्वोत्तरप्रपाठकयोः सङ्गतिं दर्शयति–ओमित्येतदित्यादिना । सर्वथाऽपि सा-
यवषियत्वे स्तोभाक्षरविषयत्वे चेत्यर्थः । इतिशब्दो हेत्वर्थः । यस्मादेकदेश-
याण्युपासनानि वृत्तानि तस्मात्तानि समस्तविषयाणि वक्तव्यानीत्यर्थः ।
शोपास्तिव्याख्यानन्तर्यमथशब्दार्थः । कथमुक्तवक्ष्यमाणोपासनयोरिदं
पर्यं तत्राऽऽह–युक्तं हीति । समस्तस्योपासनं साध्विति वचनादवयवोपा-
निन्दितत्वादननुष्ठेयमित्याशङ्क्याऽऽह–समस्त इति । अर्थादस्ति निन्देति
ा–नन्विति । पूर्वत्रापि साधुत्वस्य विद्यमानस्यैव विशेषणत्वेनानुपादाना-
दपि निन्देति परिहरति–न साध्विति । यत्खल्वित्यादि व्याख्यातुं पातनि-
ह–साधुशब्द इति । वाक्यमवतार्य व्याचष्टे–कथमित्यादिना ॥ १ ॥
कं पुनरेवं विवेककरणे कारणमित्याशङ्क्याऽऽह–तत्रेति । विवेककरणो-
ेदविकल्पार्थमुतेत्युभयत्र पदम् । साम्नैनमित्यादिना साधुनेत्यादिवा-

साम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥

अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥३॥

स य एतदेवं विद्वान्साधु सामेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

प्रायः । शोभनाभिप्रायेण साधुनैनमुपागादित्येव तत्त्राऽऽहुर्लौकिका बन्धनाद्यसाधुकार्यमपश्यन्तः । यत्र पुनर्विपर्ययो बन्धनाद्यसाधुकार्यं पश्यन्ति तत्रासाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥

अथोताप्याहुः स्वसंवेद्यं साम नोऽस्माकं बतेत्यनुकम्पयन्तः संवृत्तमित्याहुः । एतत्तैरुक्तं भवति यत्साधु भवति साधु बतेत्येव तदाहुः । विपर्यये जातेऽसाम नो बतेति । यदसाधु भवत्यसाधु बतेत्येव तदाहुः । तस्मात्सामसाधुशब्दयोरेकार्थत्वं सिद्धम् ॥ ३ ॥

अतः स यः कश्चित्साधु सामेति साधुगुणवत्सामेत्युपास्ते समस्तं साम साधुगुणवद्विद्वांस्तस्यैतत्फलमभ्याशो ह क्षिप्रं ह यदिति क्रियाविशेषणार्थमेनमुपासकं साधवः शोभना धर्माः श्रुतिस्मृतिविरुद्धा आ च गच्छेयुरागच्छेयुश्च । न केवलमागच्छेयुरुप च नमेयुरुपनमेयुश्च भोग्यत्वेनोपतिष्ठेयुरित्यर्थः ॥ ४ ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

क्यस्य पौनरुक्त्यमाशङ्क्य व्याख्यानव्याख्येयभावान्मैवमित्याह-शोभनेति । शोभनकार्यदर्शने सतीति यावत् । तत्रैव हेत्वन्तरमाह-बन्धनादीति । असाम्नेत्यादि व्याचष्टे-यत्रेति ॥ २ ॥

कार्यगम्यं साधुत्वमसाधुत्वं चोक्त्वा स्वानुभवगम्यं तदुपन्यस्यति-अथेति । कार्योक्तस्य साधुत्वादिविवेकानन्तर्यमथशब्दार्थः । स्वसंवेद्यं साधुत्वमसाधुत्वं चेति शेषः । तत्र साधुत्वं स्वानुभवसिद्धमित्येतद्व्युत्पादयति-सामेति । यत्साध्वित्यादिवाक्यस्य पूर्वेण पौनरुक्त्यमाशङ्क्याऽऽह-एतदिति । असामेत्यादि व्याचष्टे-विपर्यय इति । बतेत्याहुरिति सम्बन्धः । किं तैरुक्तं भवति तदाह-यदसाध्विति । साधुशब्दः शोभनवाचीत्युक्तमुपसंहरति-तस्मादिति ॥ ३ ॥

तयोरेकार्थत्वमतःशब्दार्थः । उपासकमेव विशिनष्टि-समस्तमिति । आग-

# अथ द्वितीयाध्यायस्य द्वितीयः खण्डः

लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हिङ्कारः । अग्निः प्रस्ता-

कानि पुनस्तानि साधुदृष्टिविशिष्टानि समस्तानि सामान्युपास्याति । इमानि तान्युच्यन्ते लोकेषु पञ्चविधमित्यादीनि । ननु लोकादिया तान्युपास्यानि साधुदृष्ट्या चेति विरुद्धम् । न । साध्वर्थस्य लोकाकार्येषु कारणस्यानुगतत्वात् । मृदादिवद्घटादिविकारेषु । साधुशब्दस्योऽर्थो धर्मो ब्रह्म वा सर्वथाऽपि लोकादिकार्येष्वनुगतम् । अतो यथा घटादिदृष्टिर्मृदादिदृष्ट्यनुगतैव सा । तथा साधुदृष्ट्यनुगतैव लोकादिष्टिः । धर्मादिकार्यत्वाल्लोकादीनाम् । यद्यपि कारणत्वमविशिष्टं ब्रह्मधर्मयोः, तथाऽपि धर्म एव साधुशब्दवाच्य इति युक्तं साधुकारी साधुर्भवतीति धर्मविषये साधुशब्दप्रयोगात् । ननु लोकादिकार्येषु कारणस्यानुगतत्वादर्थप्राप्तैव तद्दृष्टिरिति साधु सामेत्युपास्त इति न वक्तव्यम् । शास्त्रगम्यत्वात्तद्दृष्टेः । सर्वत्र हि शास्त्रप्रापिता एव धर्मा उपास्या न

ह्येयुरिति यत्तदिक्षिप्रमेवेति क्रियाविशेषणत्वं यदित्यस्य द्रष्टव्यम् ॥ ४ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छाङ्करभाष्यटीकायां द्वितीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

कस्योभयदृष्टिविषयत्वमयुक्तम् । नहि घटदृष्टिगोचरः सन्पटदृष्टिरपि गोचरः ादिति शङ्कते—नन्विति । एकस्मिन्नपि प्रस्तुतं दृष्टिद्वयमविद्धमिति समाधत्ते—साध्वर्थस्येति । यथा घटादिषु मृदाद्यनुगतं तथा साधुशब्दार्थस्य कारणस्य लोकादिषु कार्येष्वनुगतत्वाद्दृष्टौ साधुदृष्टेरनुगमान्न दृष्टिद्वयस्यैकत्र विरोधोऽस्तीत्यर्थः । तदेव स्फुटयति—साधुशब्देति । साध्वर्थस्य लोकेष्वनुगतिरपिशब्दार्थः । यत्रेति देवदत्तोक्तिः । सा घटादिदृष्टिस्तत्रेति शेषः । ननु साधुशब्दार्थयोर्धर्मब्रह्मणोस्तुल्यं कारणत्वम् । तथा चात्र साधुशब्दार्थो न व्यवस्थितः ादन्याय्यं चानेकार्थत्वमित्याशङ्क्याऽऽह—यद्यपीति । धर्म एवेत्यत्र तथाऽपीति वक्तव्यम् । ब्रह्मणि तु परमानन्दे साधुशब्दो भक्त्या गमयितव्यः । न च धर्मस्य निमित्तकारणत्वान्न कार्येऽनुगतिरिति वाच्यम् । कर्मापूर्वसहितदधिपयःप्रभृत्यवयवसमुदायस्य धर्मत्वात्तत्परिणामत्वाच्च कार्यस्य तत्र तदनुगतिसिद्धेरिति द्रष्टव्यम् । अपूर्वत्वाभावेन विधिमाक्षिपति—नन्विति । कारणानुगतस्याऽऽनुमानिकत्वेऽपि तद्दृष्टिकरणमपूर्वमेवेति परिहरति—न शास्त्रगम्यत्वादिति ।

वोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥
अथाऽऽवृत्तेषु द्यौर्हिंकार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः

विद्यमाना अन्यशास्त्रीयाः ।

लोकेषु पृथिव्यादिषु पञ्चविधं पञ्चभक्तिभेदेन पञ्चप्रकारं साधु समस्तं सामोपासीत । कथम् । पृथिवी हिङ्कारः । लोकेष्विति या सप्तमी तां प्रथमात्वेन विपरिणमय्य पृथिवीदृष्ट्या हिङ्कारे पृथिवी हिङ्कार इत्युपासीत । व्यत्यस्य वा सप्तमीश्रुतिं लोकविषयां हिङ्कारादिषु पृथिव्यादिदृष्टिं कृत्वोपासीत तत्र पृथिवी हिङ्कारः । प्राथम्यसामान्यात् । अग्निः प्रस्तावः । अग्नौ हि कर्माणि प्रस्तूयन्ते । प्रस्तावश्च भक्तिः । अन्तरिक्षमुद्गीथः । अन्तरिक्षं हि गगनम् । गकारविशिष्टश्चोद्गीथः । आदित्यः प्रतिहारः प्रतिप्राण्यभिमुखत्वान्मां प्रति मां प्रतीति । द्यौर्निधनम् । दिवि निधीयन्ते ह्येतो गता इत्यूर्ध्वेषूर्ध्वगतेषु लोकदृष्ट्या सामोपासनम् ॥ १ ॥

अथाऽऽवृत्तेष्ववाङ्मुखेषु पञ्चविधमुच्यते सामोपासनम् । गत्यागति-

यश्चार्थादर्थो न स चोदनार्थ इति न्यायेनोक्तं विवृणोति-सर्वत्रेति ।

लोकेष्वित्यादिवाक्ये पञ्चविधसामदृष्ट्या लोकानामुपास्यत्वप्रतीतेरत्रापि हिङ्कारदृष्ट्या पृथिव्या ध्येयत्वे प्राप्ते प्रत्याह-लोकेष्वितीति । लोकाः पञ्चविधं सामेत्युपासीतेति विभक्तिविपरिणामेन प्रथमवाक्यार्थपर्यवसानात्तदनुसारेणात्रापि पृथिवीदृष्ट्या हिङ्कारे ध्येये सति पृथिवी हिङ्कार इति पृथिवीदृष्टिमारोप्य हिङ्कारमुपासीतेति द्वितीयवाक्यं पर्यस्यतीत्यर्थः । लोकसम्बद्धा सप्तमीश्रुतिर्हिङ्कारादिषु तत्सम्बन्धा च द्वितीया लोकेषु नेतव्या । तथा च लोकविषया सप्तमी हिङ्कारादिषु तत्सम्बन्धा च द्वितीया लोकेषु व्यत्यस्य पृथिव्यादिदृष्टिं हिङ्कारादिषु कृत्वोपासीतेति पक्षान्तरमाह-व्यत्यस्येति । ब्रह्मदृष्टिरुत्कर्षादिति न्यायेन पक्षद्वयमुक्त्वा प्रतिवाक्यं व्याचष्टे-तत्रेति । उक्तरीत्याऽन्योपासने प्रस्तुते सतीति यावत् । अध्यासस्य सादृश्यनिबन्धनत्वाद्व्यक्तसादृश्याभावेऽपि यथाकथञ्चित्कल्पनीयमिति मत्वाऽऽह-प्राथम्येति । लोकेषु पृथिव्याः सामसु च हिङ्कारस्य च प्राथम्यमस्ति तस्मात्सामान्यादिति यावत् । अग्निदृष्ट्या प्रस्तावोपासने प्रस्तावत्वे सामान्यमाह-अग्नौ हीति । अन्तरिक्षदृष्ट्योद्गीथोपासने गकारसम्बन्धसादृश्यं दर्शयति-अन्तरिक्षं हीति । आदित्यदृष्ट्या प्रतिहारोपास्तौ प्रतिशब्दसामान्यं हेतुमाह-प्रतिप्राणीति । द्युदृष्ट्या निधनोपासने निधनत्वसामान्यमाह-दिवीति । उक्तमुपासनमुपसंहरति-इत्यूर्ध्वेष्विति ॥ १ ॥

अथाऽऽवृत्तेष्विति वाक्यं व्याकरोति-अथेति । पृथिवीमुख्येषु द्युपर्यन्तेषु

तेहारः पृथिवी निधनम् ॥ २ ॥

कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च य एतदेवं विद्वाँल्लोकेषु
ञ्चविधं सामोपास्ते ॥ ३ ॥

इति छान्दोग्योपनिषदि द्वितीयाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

शेष्टा हि लोकाः । यथा ते तथादृष्ट्यैव सामोपासनं विधीयते यतोऽत
वृत्तेषु लोकेषु । द्यौर्हिङ्कारः प्राथम्यात् । आदित्यः प्रस्तावः । उदिते
दित्ये प्रस्तूयन्ते कर्माणि प्राणिनाम् । अन्तरिक्षमुद्गीथः पूर्ववत् । अग्निः
हारः । प्राणिभिः प्रतिहरणादग्नेः । पृथिवी निधनम् । तत आगताना-
निधनात् ॥ २ ॥

उपासनफलं—कल्पन्ते समर्था भवन्ति हास्मै लोका ऊर्ध्वाश्चाऽऽवृ-
श्च गत्यागतिविशिष्टा भोग्यत्वेन व्यवतिष्ठन्त इत्यर्थः । य एतदेवं
द्वाँल्लोकेषु पञ्चविधं समस्तं साधु सामेत्युपास्त इति सर्वत्र योजना
विधे सप्तविधे च ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

विधसामोपासनकथनान्तर्यमथशब्दार्थः । पूर्वोत्तरग्रन्थयोर्मिथो विरोधं
ङ्कृत्वा परिहरति—गत्यागतीति । यथा वा ते गतिविशिष्टास्तथादृष्ट्यैव हिङ्का-
पासनं विहितम् । यथा चाऽऽगतिविशिष्टास्ते तथादृष्ट्यैव तदुपासनं
ीयते । तथा च शास्त्रानुसारेण क्रियमाणयोरुपासनयोर्न विरोधोऽ-
यर्थः । द्विधोपास्तिविषयसन्दर्भयोर्विरोधाभावमनूद्य फलितमुपासनं दर्श-
—यत इति । द्युलोकदृष्ट्या हिङ्कारस्योपास्यत्वे हेतुमाह—प्राथम्यादिति । आवृत्तौ
कस्याऽऽरम्भे च हिङ्कारस्य प्राथम्यं द्रष्टव्यम् । आदित्यदृष्ट्या प्रस्तावस्यो-
त्वे हेतुमाह—उदित इति । पूर्ववदिति गकाराक्षरसामान्यं विवक्षितम् ।
दृष्ट्या प्रतिहारोपास्तौ हेतुमाह—प्राणिभिरिति । प्रतिहरणमितस्ततो नयनम् ।२।
साधिवतिपदं सर्वत्र द्रष्टव्यमित्याह—इति सर्वत्रेति । सर्वत्रेत्यस्य व्याख्या—
ाध इत्यादि ॥ ३ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छाङ्करभाष्यटीकायां
द्वितीयाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

# द्वितीयाध्यायस्य तृतीयः खण्डः

वृष्टौ पञ्चविधꣳ सामोपासीत पुरोवातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥१॥

उद्गृह्णाति तन्निधनं वर्षयति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधꣳ सामोपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

वृष्टौ पञ्चविधं सामोपासीत । लोकस्थितेर्वृष्टिनिमित्तत्वादानन्तर्यम् । पुरोवातो हिङ्कारः । पुरोवाताद्युद्ग्रहणान्ता हि वृष्टिः । यथा साम हिङ्कारादिनिधनान्तम् । अतः पुरोवातो हिङ्कारः । प्राथम्यात् । मेघो जायते स प्रस्तावः । प्रावृषि मेघजनने वृष्टेः प्रस्ताव इति हि प्रसिद्धिः । वर्षति स उद्गीथः । श्रैष्ठ्यात् । विद्योतते स्तनयति स प्रतिहारः । प्रतिहृतत्वात् ॥१॥

उद्गृह्णाति तन्निधनम् । समाप्तिसामान्यात् । फलमुपासनस्य–वर्षति हास्मा इच्छातः । तथा वर्षयति हासत्यामपि वृष्टौ । य एतदित्यादि पूर्ववत् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

ननु लोकदृष्ट्या सामोपास्त्यनन्तरं किमिति वृष्टिदृष्ट्या तदुपास्तिरुपन्यस्यते तत्राऽऽह–लोकस्थितेरिति । पुरोवातदृष्ट्या हिङ्कारोपासने हेतुमाह–पुरोवातादीति । उद्ग्रहणं वर्षोपसंहरणम् । अतःशब्दार्थमाह–प्राथम्यादिति । मेघजन्मदृष्ट्या प्रस्तावोपास्तौ हेतुमाह–प्रावृषीति । वर्षणदृष्ट्योद्गीथोपासने हेतुमाह–श्रैष्ठ्यादिति । विद्योतनस्तनयित्नुदृष्ट्या प्रतिहारोपासने कारणमाह–प्रतिहृतत्वादिति । विद्युतां स्तनयित्नूनां च प्रतिहृतत्वं विप्रकीर्णत्वं तेन प्रतिशब्दसादृश्याद्विद्योतनादिदृष्ट्या कर्तव्या प्रतिहारोपास्तिरित्यर्थः ॥ १ ॥

उद्ग्रहणदृष्ट्या निधनोपासने निदानमाह–समाप्तीति । वर्षति पर्जन्ये तदनुमन्तृत्वमकिञ्चित्करमित्याशङ्क्याऽऽह–असत्यामपीति ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छाङ्करभाष्यटीकायां द्वितीयाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

# अथ द्वितीयाध्यायस्य चतुर्थः खण्डः

सर्वास्वप्सु पञ्चविधꣳ सामोपासीत मेघो यत्संप्लवते स हिङ्कारो ।द्वर्षति स प्रस्तावो याः प्राच्यः स्यदन्ते स उद्गीथो याः प्रतीच्यः । प्रतिहारः समुद्रो निधनम् ॥ १ ॥

न हाप्सु प्रैत्यप्सुमान्भवति य एतदेवं विद्वान्सर्वास्वप्सु पञ्च-वेधꣳ सामोपास्ते ॥ २ ॥

इति च्छन्दोग्योपनिषदि द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

सर्वास्वप्सु पञ्चविधं सामोपासीत । वृष्टिपूर्वकत्वात्सर्वासामपामान-ार्यम् । मेघो यत्सम्प्लवत एकीभावेनेतरेतरं घनो भवति मेघो यदोन्नत-ादा सम्प्लवत इत्युच्यते मेघस्तदाऽपामारम्भः स हिङ्कारः । यद्वर्षति स स्तावः । आपः सर्वतो व्याप्तुं प्रस्तुताः । याः प्राच्यः स्यन्दन्ते स उद्गीथः । श्यात् । याः प्रतीच्यः स प्रतिहारः । प्रतिशब्दसामान्यात् । समुद्रो ।धनम् । तन्निधनत्वादपाम् ॥ १ ॥

न हाप्सु प्रैति । नेच्छति चेत् । अप्सुमानम्मान्भवति फलम् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

किमिति वृष्टिदृष्टेरनन्तरमपां दृष्टिः सान्नि क्षिप्यते तत्राऽऽह—वृष्टिपूर्वकत्वा-ति । मेघसम्प्लवदृष्ट्या हिङ्कारमारम्भसामान्यादुपासीतेत्याह—मेघ इति । वर्ष-ष्ट्या प्रस्तावस्योपास्यत्वे हेतुमाह—आप इति । प्राच्यो नद्यो गङ्गाद्याः । प्रती-यस्तु नर्मदाद्या इति भेदः ॥ १ ॥

तर्हि गङ्गादावपेक्षितमपि मरणं न स्यादिति चेत्तत्राऽऽह—नेच्छति चेदिति । ।सावुपासको मरुस्थलीष्वपि यथेच्छमुदकवान्भवतीत्यर्थः ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

